# .. Sharabhasahasranamastotram 2 ..

# ॥ श्रीशरभसहस्रनामस्तोत्रम् २ ॥

## Sanskrit Document Information

Text title : sharabheshvarasahasranAmastotram 2

File name : sharabhasahasranAmastotra.itx

Category : sahasranAma, shiva

Location : doc_shiva

Author : harihara

Language : Sanskrit

Subject : philosophy/hinduism/religion

Transliterated by : DPD

Proofread by : DPD, Pallasena Narayanaswami ppnswami at gmail.com

Description-comments : sharabhatantra, Akashabhairava tantra

Latest update : August 18, 2017

Send corrections to : Sanskrit@cheerful.com

Site access : http://sanskritdocuments.org



August 19, 2017

*sanskritdocuments.org*

# ॥ श्रीशरभसहस्रनामस्तोत्रम् २ ॥

हरिहरविरचितम् - आकशभैरव तन्त्रे

श्री गणेशाय नमः ॥

ॐ खें खां खं फट् प्राण ग्रहासि
प्राण ग्रहासि हुं फट् सर्व शत्रु संहारणाय शरभ सालुवाय
पक्षिराजाय हु फट् स्वाहा ॥

द्विचत्वारिंशद्वर्णः
ॐ अस्य श्री शरभ मन्त्रस्य कालाग्नि रुद्र ऋषिर्जगती छन्दः
श्री शरभेश्वरो देवता ऊं बीजं स्वाहा शक्ति फट् कीलकं
श्री शरभेश्वर प्रीत्यर्थे जपे विनियोगः ।
शिरसि कालाग्नि रुद्राय ऋषये नमः ।
मुखे जगती छन्दसे नमः ॥

हृदि शरभेश्वराय देवतायै नमः गुह्ये ऊँ बीजाय नमः ।
पादयो स्वाहा शक्तये नमः ॥

सर्वाङ्गं हुं फट् कीलकाय नमः ॥

ऊँ खें खां अङ्गुष्ठाभ्यां नमः ॥

खं फट् तर्जनीभ्यां स्वाहा ॥

प्राणग्रहासि प्राणग्रहासि हुं फट् मध्यमाभ्यां वषट् ।
सर्वशत्रु संहारणाय अनामिकाभ्यां हुम् ॥

शरभ-सालुवाय कनिष्ठिकाभ्यां वौषट् ॥

पक्षिराजाय हुं फट् स्वाहा करतलकर पृष्ठाभ्यां फट् ॥

अथ हृदयादि न्यास ॥

ॐ खें खां हृदयाय नमः ॥ ॐ खं फट् शिरसे स्वाहा ॥

प्राणग्रहासि प्राणग्रहासि हुं फट् शिखायै वषट् ॥

सर्वशत्रु संहारणाय कवचाय हुम् ॥

शरभ सालुवाय नेत्रत्रयाय वौषट् ॥

पक्षिराजाय हुं फट् स्वाहा अस्त्राय फट् ॥

॥ ध्यानम् ॥

चन्द्रार्कौवह्निदृष्टिः कुलिशवरनखश्चञ्चंलोत्युग्रजिह्वः ।
काली दुर्गा च पक्षौ हृदयजठरगौभैरवो वाडवाग्निः ॥

ऊरुस्थौ व्याधिमृत्यु शरभवर खगश्चण्ड वातातिवेगः ।
संहर्ता सर्वशत्रून् स जयति शरभः शालुवः पक्षिराजः ॥ १॥

वर्णसहस्त्रं जपः ॥ पायसेन घृताक्तेन होमः ॥

अथ सङ्कल्पः ।
गौरीवल्लभ कामारे कालकूटविषादन ।
मामुद्धरापदाम्माधेस्त्रिपुरघ्नान्त कान्तक ॥

अथ श्रीशरभसहस्रनामस्तोत्रम् ॥

ॐ सर्वभूतात्मभूतस्य रहस्यमित तेजस ।
अष्टोत्तरसहस्त्रं तु नाम्नां सर्वस्य मे श्रृणु ॥ १॥

यच्छ्रुत्वा मनुज व्याघ्र सर्वान्तामानवाप्यसि ।
स्थिरः स्थाणुः प्रभुर्भीमः प्रभवो वरदो वरः ॥ २॥

जटी चर्मी शिखण्डी च सर्वाङ्गः सर्वभावनः ।
हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ॥ ३॥

प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः ।
श्मशानवासी भगवान् वचसोऽगोचरो धनः ॥ ४॥

अतिवाधो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवृषोथ प्रच्छन्नः सर्वलोकप्रजापतिः ॥ ५॥

महारूपो महाकायो वृषरूपो महायशाः ।
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ॥ ६॥

लोकपालोऽतर्हितात्मा प्रसादो हयगर्दभी ।
पवित्रश्च महांश्चैव नियमो निगमप्रिय ॥ ७॥

सर्वकर्मा स्वयम्भूश्च आदिसृष्टिकरो निधि ।
सहस्राक्षो विरूपाक्षः सोमो नक्षत्रसाधकः ॥ ८॥

सूर्यचन्द्रगतिः केतुर्ग्रहो ग्रहपतिर्वरः ।
अदारिद्रघ्नालय कर्ता मृगबाणार्पणोनघः ॥ ९॥

महातपा दीर्घतपा अदीनो दीनसाधनः ।
संवत्सरकरो मन्त्री प्रमाणं परमं तपः ॥ १०॥

योगी योग्यो महाबीजो महारेता महातपाः ।
सुवर्णरेताः सर्वज्ञः सुबीजो वृषवाहनः ॥ ११॥

दशबाहुश्च निमिषो नीलकण्ठ उमापतिः ।
बहुरूपः स्वयंश्रेष्ठो बलिर्वैरोचनो गणः ॥ १२॥

गणकर्त्ता गणपतिर्दिग्वासाः काम एव च ।
मन्त्रवित्परमोमन्त्रः सर्वभावकरो हरः ॥ १३॥

कमण्डलुधरो धन्वी वाणहस्तः कपालवान् ।
अशिनी शतघ्नी खण्डी पट्टिशश्चायुधी महान् ॥ १४॥

श्रुतिहस्तः सरूपश्च तेजस्तेजस्करो विभुः ।
उश्नीषी च सुवक्रश्च उदग्रो विनयस्तथा ॥ १५॥

दीर्घश्च हरिनेत्रश्च सुतीर्थः कृष्ण एव च ।
श्रृगालरूपः सर्वार्थो मुण्डः सर्वकमण्डलुः ॥ १६॥

अजश्च मृगरूपश्च गन्धचारी कपर्दिनः ।
ऊर्ध्वरेता उर्ध्वलिङ्ग उर्ध्वशायी नभस्तलः ॥ १७॥

त्रिजटश्चौरवासी च रुद्रसेनापतिर्विभुः ।
नक्तञ्चरोतितिग्मश्च अहश्चारी सुवर्चसः ॥ १८॥

गजहा दैत्यहा चैव लोकभ्राता गुणाकरः ।
सिंहशार्दूलरूपश्च आर्द्रचर्मांवरो वरः ॥ १९॥

कालयोगी महाकालः सर्ववासाश्चतुष्पथ ।
निशाचर प्रेतचारी भूतचारी महेश्वरः ॥ २०॥

बहुरूपो बहुधन सर्वाधारा मनोगतिः ।

नृत्यप्रियो नृत्यतृप्तो नृत्यकः सर्वमालयः ॥ २१॥

धोषो महातपा ईशो नित्यो गिरिचरो नभः ।
सहस्रहस्तो विजयो व्यवसायोह्यनिन्दितः ॥ २२॥

अमर्षणो महामर्षी ई यशकामो मनोमयः ।
दक्षयज्ञापहारी च सुखदो मध्यमस्तथा ॥ २३॥

तेजोपहारी बलहा मुदितोप्यजितो भवः ।
दम्भी द्वेषी गम्भीरो गम्भीरबलवाहनः ॥ २४॥

न्यग्रोधरूपो न्यग्रोधो वृक्षकर्त्तास्गवृद्धिभुः ।
तीक्ष्णव्वाहुश्च हर्षश्च सहायः सर्वकालवित् ॥ २५॥

विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः ।
हुताशन सहायश्च प्रशान्तात्मा हुताशनः ॥ २६॥

उग्रतेजा महातेजा जयो (जयो) विजय कालवित् ।
ज्योतिषामयनः सिद्धिः सन्धिविग्रह एव च ॥ २७॥

शिखी दण्डी जटी ज्वाली मृत्युजिद्दुर्धरो वली ।
वैष्णवी पणवीताली कालः काटकटङ्करः ॥ २८॥

नक्षत्रविग्रहविधिर्गुणवृद्धिलयोगमः ।
प्रजापति दिशा वाहु विभागः सर्वतोमुखः ॥ २९॥

वैरोचनो सुरगणो हिरण्यकवचोद्भवः ।
अप्रज्यो वालचारी च महाचारी स्तुतस्तथा ॥ ३०॥

सर्वतूर्य निनादी च सर्वनाथ परिग्रहः ।
व्यालरूपो विलावासी हेममाली तरङ्गवित् ॥ ३१॥

त्रिदिशस्त्रिदिशावासी सर्वबन्धविमोचनः ।
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ॥ ३२॥

साक्षात्प्रसादो दुर्वासा सर्वसाधुनिषेवितः ।
पुस्कन्दनो विभावश्च अतुल्यो यज्ञभागवित् ॥ ३३॥

सर्वचारी सर्ववासो दुर्वासा वाङ्मनोभवः ।
हेमो हेमकरो यज्ञः सर्ववीरो नरोत्तमः ॥ ३४॥

लोहिताक्षो महोक्षश्च विजयाख्यो विशारदः ।
सद्ग्रहो विग्रहो कर्मा मोक्षः सर्वनिवासनः ॥ ३५॥

मुख्यो मुक्तश्च देहश्च देहार्थः सर्वकामदः ।
सर्वकालप्रसादश्च सुवलो वलरूपधृक् ॥ ३६॥

आकाशनिधिरूपश्च निषादी उरगः खगः ।
रौद्ररूपी पांसुरादीः वसुरग्निः सुवर्चसी ॥ ३७॥

वसुवेगो महावेगो महायक्षो निशाकरः ।
सर्वभावप्रियावासी उपदेशकरो हरः ॥ ३८॥

मनुरात्मा पतिर्लोकी सम्भोज्यश्च सहस्रशः ।
पक्षी च पक्षिरूपी च अतिदीप्तो विशाम्पतिः ॥ ३९॥

उन्मादो मदनः कामोह्यास्योर्थकरोयशः ।
वामदेवश्च रामश्च प्राग्दक्षिणश्च वामनः ॥ ४०॥

सिद्धयोगो महर्षिश्च सिद्धार्थः सिद्धिसाधकः ।
विष्णुश्च भिक्षुरूपश्च विषघ्नो मृदुरव्ययः ॥ ४१॥

महासेनो विशाखश्च वृष्टिभोगो गवां पति ।
वज्रहस्तश्च विष्कुम्भी च भूस्तम्भन एव च ॥ ४२॥

वृत्तो वृत्तकरः स्थणुर्मधुमधुकरो धनः ।
वाचस्पत्यो वाजसेनो नित्यमाश्रमपूजितः ॥ ४३॥

ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ।
ईशान ईश्वरः कालो निशाचारी पिनाकधृक् ॥ ४४॥

निमित्तज्ञो (स्थो) निमत्तश्च नन्दिर्नादकरो हरिः ।
नदीश्वरश्च नन्दी च नन्दिनो नन्दिवर्द्धनः ॥ ४५॥

भगहारी निहन्ता च कालो ब्रह्मा पितामहः ।
चतुर्मुखो महालिङ्गश्चतुर्लिङ्गस्थैव च ॥ ४६॥

लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ।
बीजाध्यक्षो बीजकर्त्ता अध्यात्मानुगतो बलः ॥ ४७॥

इतिहासः सकल्पश्च गौतमोथ निशाकरः ।
दभोह्यदभो वैदम्भो वश्यो वश्यकरः कलिः ॥ ४८॥

लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः ।
अक्षरं परमं ब्रह्म वलटाच्छन्न एव च ॥ ४९॥

नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो गतागतिः ।
बहुप्रसाद सुस्वप्नो दर्पणोथत्वमित्रजित् ॥ ५०।
वेदकारो मन्त्रकारो विद्वान्समरमर्दनः ।
महामोघनिवासी च महाघोरो वशीकरः ॥ ५१॥

अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः ।
वृषलः शङ्करो नित्यो वर्चसी धूम्रलोचनः ॥ ५२॥

नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ।
स्वस्तिदः स्वस्तिभावश्च भोगी भोगकरो लघुः ॥ ५३॥

उत्सङ्गश्च महाङ्गश्च महाभोगो परायणः ।
कृष्णवर्णः सुवर्णश्च इन्द्रियं सर्वदेहिनाम् ॥ ५४॥

महापादो महाहस्तो महाकायो महायशाः ।
महामूर्द्धा महामात्रो महानेत्रो निशालयः ॥ ५५॥

महान्तको महाकर्णो महोक्षश्च महाहनुः ।
महाननो महाकंवुर्महाग्रीवः श्मशानभाक् ॥ ५६॥

महावक्षा महोरस्को ह्यन्तरामा मृगालयः ।
लम्बितो लम्बितोष्टश्च महामाया पयोनिधि ॥ ५७॥

महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ।
महानखो महारोमा महाकेशो महाजरः ॥ ५८॥

प्रसन्नश्च प्रसादश्च प्रतयो योगिसाधनः ।
स्नेहनोतिशुभस्नेहः अजितश्च महामुनिः ॥ ५९॥

वृक्षकारो वृक्षकेतुः अनलो वायुवाहनः ।
मण्डली धामश्च देवाधिपतिरेव च ॥ ६०॥

अथर्वशीर्षः सामास्यः ऋक् साहस्र मितेक्षणः ।

यजुः पादभुजागुह्यः प्रकाशो जङ्गमस्तथा ॥ ६१॥

अमोघार्थप्रसादश्च अतिगम्यः सुदर्शनः ।
उपकारप्रियः सर्वः कनकः काञ्चनस्थितः ॥ ६२॥

नाभिर्नन्दिकरो भावः पुष्करस्य पतिस्थिरः ।
द्वादशास्त्रमसश्चाघो यज्ञो यज्ञसमाहितः ॥ ६३॥

नक्तं कलिश्च कालश्च ककारः कालपूजितः ।
सवाणो गणकारश्च भूतवाहनसारथिः ॥ ६४॥

भस्मशायी भस्मगोप्ता भस्मभूतस्तमोगुणः ।
लोकपालस्तथा लोको महात्मा सर्वपूजितः ॥ ६५॥

शुक्लस्त्रिशुक्लसम्पन्नः शुचिर्भूतनिषेवितः ।
आश्रमस्थः क्रियावस्थो विश्वकर्मा मतिर्वरः ॥ ६६॥

विशालशाखस्ताम्रोष्टोह्यम्बुजालः सुनिश्चलः ।
कपिलः कपिलः शुक्ल आयुश्चैव परोवरः ॥ ६७॥

गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः ।
परश्वधायुधो देव अन्धकारिः सुवान्धवः ॥ ६८॥

तुम्बवीणो महाक्रोध ऊर्ध्वरेता जलेशयः ।
उग्रो वंशकरो द्वंशो वंशनादोह्यनिन्दितः ॥ ६९॥

सर्वाङ्गरूपो मायावी सुहृदोह्यनिलोनलः ।
बन्धनो बन्धकर्ता च सुबधुरविमोचनः ॥ ७०॥

मेषजारिः सुकर्मारिर्महादंष्ट्रसमो युधि ।
बहुस्वनिर्मितः सर्वः शङ्करः शङ्करो वरः ॥ ७१॥

अमरेशो महादेवो विश्वदेवः सुरारिहा ।
निसङ्गश्चाहिर्बुध्न्यनश्चाकिताक्षो हरिस्तथा ॥ ७२॥

अजैकपालपालीच त्रिशङ्कुरजितः शिवः ।
धन्वतरिर्धूम्रकेतुः स्कन्दो वैश्रवणस्तथा ॥ ७३॥

धाता शक्रश्च विश्वश्च मित्रस्त्वष्टाध्रुवो वसुः ।
प्रभावः सर्वगो वायुरर्यमासवितारथिः ॥ ७४॥

उग्रदंष्ट्रो विधाता च मान्धाता भूतभावनः ।
रतिस्तीर्थश्च वाग्मी च सर्वकर्मगुणावह ॥ ७५॥।

पद्मवक्रो महावक्रश्चन्द्रवक्रो मनोरमः ।
वलयान्यश्च शान्तश्च पुराणः पुण्यवर्चसः ॥ ७६॥

कुरुकर्ता कालरूपी कुरुभूतो महेश्वरः ।
शर्वो सर्वो दर्भशायी सर्वेषां प्राणिनां पतिः ॥ ७७॥

देवदेव सुखाशक्तः सदसत्संवररत्नवित् ।
कैलासशिखिरावासी हिमवद्गिरिसंश्रयः ॥ ७८॥

कूलहारी कूलकर्त्ता बहुबीजो बहुप्रदः ।
वनिजो वर्द्धनो दक्षो नकुलश्चदनश्छदः ॥ ७९॥

सारग्रीवी महाजन्तुरत्नकश्च महौषधिः ।
सिद्धार्थकारी सिद्धार्थः छन्दो व्याकरणानि च ॥ ८०॥

सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः ।
प्रभावात्मा जरास्तालोल्लोकाहितान्तकः ॥ ८१॥

सारगोऽसुखवक्रान्त केतुमाली स्वभावतः ।
भूताश्रयो भूतपतिरहोरात्रमनिन्दकः ॥ ८२॥

आसनः सर्वभूतानां निलयः विभुभैरवः ।
अमोघसर्वभूषास्यो याजनः प्राणहारकः ॥ ८३॥

धृतिमान् ज्ञातिमान् दक्षः सत्कृतश्च युगाधिपः ।
गोपालो गोपतिर्गोप्ता गोश्चवसनो हरः ॥ ८४॥

हिरण्यबाहुश्च तथा गुहयकालः प्रवेशकः ।
प्रतिष्ठायां महाहर्षोञ्झितकामो जितेन्द्रियः ॥ ८५॥

गान्धारश्च सुशीलश्च तपः कर्मरतिर्धनः ।
महागीतो महाब्रह्मार्ह्मक्षरो गणसेवितः ॥ ८६॥

महाकेतुः कर्मधातनैकतानश्चराचरः ।
अवेदनीय आवेशः सर्वगन्धसुखावहः ॥ ८७॥

तोरणास्तरणो वायुः परिधावति चैतकः ।
संयोगो वर्द्धनो वृद्धो महावृद्धो गणाधिपः ॥ ८८॥

नित्यो धर्मसहायश्च देवासुरपतिः पतिः ।
अमुक्तो मुस्तबाहुश्च द्विविधश्च सुपर्वणः ॥ ८९॥

आषाढश्च सुखाढ्यश्च ध्रुवो हरिहयो हरिः ।
वसुरावर्त्तनो नित्यो वसुश्रेष्ठो महामदः ॥ ९०॥

शिरोहारी च वर्षी च सर्वलक्षणभूषितः ।
अक्षरश्चाक्षयो योगी सर्वयोगी महावलः ॥ ९१॥

समाम्नायोऽसमाम्नायस्तीर्थदेवो महाद्युतिः ।
निर्बीजो जीवनो मन्त्रो अनघो बहुकर्कशः ॥ ९२॥

रक्तप्रभूतो रक्ताङ्गो महार्णवनिनादकृत् ।
मूलो विशाखो यमृतोक्तयक्तोव्यः सनातनः ॥ ९३॥

आरोहणो निरंहश्च शैलहारी महातपाः ।
सेनाकल्पो महाकल्पो युगो युगङ्करो हरिः ॥ ९४॥

युगरूपो महारूपो पवनो गहनो नगः ।
न्यायनिर्वापणो नादः पण्डितोह्यचलोपमः ॥ ९५॥

बहुमालो महामालः सुमालो बहुलोचनः ।
विस्तारो लवणः क्रूरः ऋतुमासफलोदयः ॥ ९६॥

वृषभो वृषभागाङ्गो मणिबन्धुर्जटाधरः ।
इन्द्रो विसर्गः सुमुखः सुरः सर्वायुधः सहः ॥ ९७॥

निवेशनः सुधन्वा च पूगगन्धो महाहनुः ।
गन्धमाली च भगवान् सानन्दः सर्वकर्मणाम् ॥ ९८॥

मात्मनो बाहुलो बाहुः सकलः सर्वलोचनः ।
रुद्रस्तालीकरस्ताली ऊर्ध्वसंहतलोचनः ॥ ९९॥

छत्रपद्मः सुविख्यातः सर्वलोकाश्रयो महान् ।
मुण्डो विरूपो बहुलो दण्डी मुण्डो विकुण्डलः ॥ १००॥

हर्यक्षः ककुभोक वज्री दीप्तावर्चः सहस्रपात् ।

सहस्रमूर्द्धा देवेद्रः सर्वभूतमयो हरि ॥ १०१॥

सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वकर्मकृत् ।
पवित्रः स्निग्धयुर्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ॥ १०२॥

ब्रह्मदण्डविनिर्वातः शरघ्नः शरतापधृक् ।
पद्मगर्भो महागर्भो पद्मगर्भो जलोद्भव ॥ १०३॥

गभस्तिर्ब्रह्मकृत् ब्रह्म ब्रह्मकृद् ब्राह्मणो गति ।
अनन्तरूपो नैकात्मा तग्मतेजात्मसम्भवः ॥ १०४॥

ऊर्ध्वगात्मा पशुपतिः वीतुरङ्गा मनोजवः ।
वन्दनी पद्ममाली च गुणज्ञो स्वगुणोत्तरः ॥ १०५॥

कर्णिकारो महास्रग्वी नीलमौली पिनाकधृक् ।
उमापतिरुमाकान्तो जान्हवीहृदयङ्गमः ॥ १०६॥

वीरो वराहो वरदो वरेशश्च महामना ।
महाप्रभावस्त्वनघः शत्रुहा श्वेतपिङ्गलः ॥ १०७॥

प्रीतात्मा प्रयत्तात्मा च संयतात्मा प्रधानधृक् ।
सर्वपार्श्वस्तुतस्ताक्ष्यौ धर्मः साधारणो वरः ॥ १०८॥

चराचरात्मा सूक्ष्मात्मा गोवृषो गोवृषेश्वरः ।
साध्यर्षिर्वसुरादित्यो विवस्वान् सविता मृगः ॥ १०९॥

व्यासः सर्वस्य सङ्क्षेपो विस्तारः पर्ययोनयः ।
ऋतुः संवत्सरो मासः पक्षः सङ्ख्या परायणः ॥ ११०॥

कला काष्टा लयो मात्रा मुहूर्तः पक्षपाक्षणः ।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्त्वनिन्दितः ॥ १११॥

सद्यवतमव्यक्त पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ११२॥

निर्वाणं ज्ञानदं चैव ब्रह्मलोक परागतिः ।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ ११३॥

देवासुरमहामात्रो देवासुरसमाश्रय ।
देवासुरगणाध्यक्षो देवासुरगणाधिपः ॥ ११४॥

देवासुरेश्वरो देवो देवासुरमहेश्वरः ।
सर्वदेवमयो चिन्त्यो देवानामात्मसम्भवः ॥ ११५॥

उद्भिज्जस्त्रिक्रमो वैद्यो विराजो वरदो वरः ।
ईज्यो हस्तिमुखो व्याघ्री देवसिंहो नरर्षभः ॥ ११६॥

विबुधाग्रवरश्रेष्ठः सर्वदेवोत्तमोत्तमः ।
गुरुः कान्तो निजः सर्वः पवित्रः सर्ववाहनः ॥ ११७॥

प्रयुक्तः शोभनो वज्र ईशानः प्रभुरव्ययः ।
भृगी भृङ्गप्रियो बभ्रू राजराजो निरामयः ॥ ११८॥

अविरामः सुशरणो विरामः सर्वसाधनः ।
ललाटाक्षो विश्वदेहो हारिणो ब्रह्मवर्चसी ॥ ११९॥

स्थावराणां पतिश्चैव नियमेन्द्रियवर्द्धनः ।
सिद्धार्थः सर्वसिद्धार्थोनित्यः सत्यव्रतः शुचिः ॥ १२०॥

व्रतादिर्यत्परं ब्रह्म मुक्तानां परमागतिः ।
विमुक्तो दीर्घतेजाश्च श्रीमान् श्रीवर्द्धनो जगत् ॥ १२१॥

यथा प्रसादो भगवानिति भक्त्या स्तुतो मया ।
यन्न ब्रह्मादयो देवा विदुर्यन्न महर्षयः ॥ १२२॥

तंस्तवीम्यहमाद्यं च कस्तोष्यति जगत्प्रभुम् ।
भक्तिश्चैव पुरस्कृत्य मया यज्ञपतिर्वसुः ॥ १२३॥

ततोऽनुज्ञापयामासस्तुतो मतिमतां गतिः ।
शिव एवं स्तुतो देवैः नामभिः पुष्टिवर्द्धनैः ॥ १२४॥

नित्ययुक्तः शुचिर्भूत्वा प्राप्योत्यात्मानमात्मनः ।
एतद्धिपरमं ब्रह्मा स्वयङ्गीतं स्वयम्भुवा ॥ १२५॥

ऋषयश्चैव देवाश्च स्तुवन्त्येते नु तत्परम् ।
स्तूयमानो महादेवः प्रीयते चात्मनापतिः ॥ १२६॥

भक्तानुकम्पी भगवानात्मसंस्थान् करोति तान् ।
तथैव च मनुष्येषु यत्र कुत्र प्रधानतः ॥ १२७॥

आस्तिकः श्रद्दधानश्च बहुभिर्जन्मभिः स्तवैः ।
जाग्रतोथ स्वपतश्च व्रजन्तो गतिसंस्थिताः ॥ १२८॥

स्तुवन्ति स्तूयमाने च चतुष्पथि रमन्ति च ।
जन्मकोटिसहस्रेषु नानासंसारयोनिषु ॥ १२९॥

जन्तोर्विशुद्धपापस्य भवे भक्तिः प्रजायते ।
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः ॥ १३०॥

एतद्देवेषु दुःप्रापो मानुषेषु न लभ्यते ।
निर्विघ्ना निश्चला भद्रे भक्तिरव्यभिचारिणी ॥ १३१॥

तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृप ।
यया याति परां सिद्धिं तद्भागवतमानसः ॥ १३२॥

ये सर्वभावोपहताः परत्वेनानुभाविताः ।
प्रपन्नवत्सला देवः संसारात्तान् समुद्धरेत् ॥ १३३॥

एवमन्येपि कुर्वन्ति देवाः संसारमोचनम् ।
मनुष्याणां महादेवादन्यत्रापि तपोबलात् ॥ १३४॥

इति तेनेदं कल्यायाय भगवान् सदसत् पतिः ।
कृत्तिवासा ध्रुवं पूर्वं ताडिता शुद्धबुद्धयः ॥ १३५॥

स्तवमेनं भगवति ब्रह्मो स्वयमधारयत् ।
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ॥ १३६॥

मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागयत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्म सम्मतिः ॥ १३७॥

स्तण्डीः प्रोवाच शुक्राय गौतमायाह भार्गवः ।
वैवस्वताय भगवान् गौतमः प्राह साधवे ॥ १३८॥

नारायणाय साध्याय मनुरिष्टाय धीमते ।
यमाय प्राह भगवान् साध्यो नारायणोव्ययः ॥ १३९॥

नाचिकेताय भगवानाह वैवस्वतो यमः ।
मार्कण्डेयाय वार्ष्णेय नाचिकेताभ्यभाषत ॥ १४०॥

तथाप्यहममित्रघ्नस्तावन्द्धाद्य विश्रुतम् ।

स्वर्ग्यमारोगयमायुष्यं धन्यं वेदैश्च सम्मितम् ॥ १४१॥

नास्य विघ्नानि कुर्वन्ति दानवा यक्षराक्षसाः ।
पिशाचा यातुधान्ताश्च गुह्यका भुजगा अपि ॥ १४२॥

य पठेत्प्रयतः प्रातर्ब्रह्माचारी जितेन्द्रिय ।
अभिन्नयोगो वर्षन्तु अश्वमेधफलं लभेत् ॥ १४३॥

इयाकाश भैरवतन्त्रे हरिहरब्रह्मविरचिते ।
शरभसहस्रनामस्तोत्रं सम्पूर्णम् ॥ १४४॥

॥ इति आकाशभैरवतन्त्रे हरिहरविरचितम्
श्रीशरभसहस्रनामस्तोत्रं सम्पूर्णम् ॥

Proofread by DPD, Pallasena Narayanaswami ppnswami at gmail.com

.. Sharabhasahasranamastotram 2 ..
Searchable pdf was typeset using XeTeXgenerateactualtext feature of XƎLaTeX 0.99996
on August 19, 2017

Please send corrections to *sanskrit@cheerful.com*